# तत्त्वबोधः

https://sa.wikisource.org/s/1rzw

तत्त्वबोधः



वासुदेवेन्द्रयोगीन्द्रं नत्वा ज्ञानप्रदं गुरुम् ।

मुमुक्षूणां हितार्थाय तत्त्वबोधोऽभिधीयते ॥

साधनचतुष्टयसम्पन्नाधिकारिणां मोक्षसाधनभूतं

तत्त्वविवेकप्रकारं वक्ष्यामः ।

१॥० साधनचतुष्टयम्

साधनचतुष्टयं किम् ?

१॥१ नित्यानित्यवस्तुविवेकः ।

१॥२ इहामुत्रार्थफलभोगविरागः ।

१॥३ शमादिषट्कसम्पत्तिः ।

१॥४ मुमुक्षुत्वं चेति ।

१॥१॥१ विवेकः

नित्यानित्यवस्तुविवेकः कः ?

नित्यवस्त्वेकं ब्रह्म तद्व्यतिरिक्तं सर्वमनित्यम् ।

अयमेव नित्यानित्यवस्तुविवेकः ।

१॥१॥२ वैराग्यम्

विरागः कः ?

इहस्वर्गभोगेषु इच्छाराहित्यम् ।

१॥१॥३ शमादिसाधनसम्पत्तिः का ?

शमो दम उपरमस्तितिक्षा श्रद्धा समाधानं च इति ।

१॥१॥३॥१ शमः

शमः कः ?

मनोनिग्रहः ।

१॥१॥३॥२ दमः

दमः कः ?

चक्षुरादिबाह्येन्द्रियनिग्रहः ।

१॥१॥३॥३ उपरमः

उपरमः कः ?

स्वधर्मानुष्ठानमेव ।

१॥१॥३॥४ तितिक्षा

तितिक्षा का ?

शीतोष्णसुखदुःखादिसहिष्णुत्वम् ।

१॥१॥३॥५ श्रद्धा

श्रद्धा कीदृशी ?

गुरुवेदान्तवाक्यादिषु विश्वासः श्रद्धा ।

१॥१॥३॥६ समाधानम्

समाधानं किम् ?

चित्तैकाग्रता ।

१॥४ मुमुक्षुत्वम्

मुमुक्षुत्वं किम् ?

मोक्षो मे भूयाद् इति इच्छा ।

एतत् साधनचतुष्टयम् ।

ततस्तत्त्वविवेकस्याधिकारिणो भवन्ति ।

२॥० तत्त्वविवेकः

२॥१ तत्त्वविवेकः कः ?

आत्मा सत्यं तदन्यत् सर्वं मिथ्येति ।

२॥२ आत्मा कः ?

स्थूलसूक्ष्मकारणशरीराद्व्यतिरिक्तः पञ्चकोशातीतः

सन् अवस्थात्रयसाक्षी सच्चिदानन्दस्वरूपः सन्

यस्तिष्ठति स आत्मा ।

३॥० शरीरत्रयम्

३॥१  स्थूलशरीरं किम् ?

पञ्चीकृतपञ्चमहाभूतैः कृतं सत्कर्मजन्यं

सुखदुःखादिभोगायतनं शरीरम्

अस्ति जायते वर्धते विपरिणमते अपक्षीयते विनश्यतीति

षड्विकारवदेतत्स्थूलशरीरम् ।

३॥२  सूक्ष्मशरीरं किम् ?

अपञ्चीकृतपञ्चमहाभूतैः कृतं सत्कर्मजन्यं

सुखदुःखादिभोगसाधनं पञ्चज्ञानेन्द्रियाणि

पञ्चकर्मेन्द्रियाणि पञ्चप्राणादयः मनश्चैकं

बुद्धिश्चैका एवं सप्तदशकलाभिः सह यत्तिष्ठति

तत्सूक्ष्मशरीरम् ।

३॥३  कारणशरीरं किम् ?

अनिर्वाच्यानाद्यविद्यारूपं शरीरद्वयस्य कारणमात्रं

सत्स्वरूपाज्ञानं निर्विकल्पकरूपं यदस्ति

तत्कारणशरीरम् ।

४॥०  ज्ञानेन्द्रियाणि

४॥१  श्रोत्रं त्वक् चक्षुः रसना घ्राणम् इति पञ्च ज्ञानेन्द्रियाणि ।

४॥१॥०  ज्ञानेन्द्रियदेवताः

४॥१॥१  श्रोत्रस्य दिग्देवता ।

४॥१॥२  त्वचो वायुः ।

४॥१॥३  चक्षुषः सूर्यः ।

४॥१॥४  रसनाया वरुणः ।

४॥१॥५  घ्राणस्य अश्विनौ ।

इति ज्ञानेन्द्रियदेवताः ।

४॥२ ज्ञानेन्द्रियविषयाः

४॥२॥१ श्रोत्रस्य विषयः शब्दग्रहणम् ।

४॥२॥२ त्वचो विषयः स्पर्शग्रहणम् ।

४॥२॥३ चक्षुषो विषयः रूपग्रहणम् ।

४॥२॥४ रसनाया विषयः रसग्रहणम् ।

४॥२॥५ घ्राणस्य विषयः गन्धग्रहणम् इति ।

५॥० कर्मेन्द्रियाणि

५॥१ वाक्पाणिपादपायूपस्थानीति पञ्चकर्मेन्द्रियाणि ।

५॥१॥० कर्मेन्द्रियदेवताः

५॥१॥१ वाचो देवता वह्निः ।

५॥१॥२ हस्तयोरिन्द्रः ।

५॥१॥३ पादयोर्विष्णुः ।

५॥१॥४ पायोर्मृत्युः ।

५॥१॥५ उपस्थस्य प्रजापतिः ।

इति कर्मेन्द्रियदेवताः ।

५॥२ कर्मेन्द्रियविषयाः

५॥२॥१ वाचो विषयः भाषणम् ।

५॥२॥२ पाण्योर्विषयः वस्तुग्रहणम् ।

५॥२॥३ पादयोर्विषयः गमनम् ।

५॥२॥४ पायोर्विषयः मलत्यागः ।

५॥२॥५ उपस्थस्य विषयः आनन्द इति ।

६॥० अवस्थात्रयम्

अवस्थात्रयं किम् ?

६॥१ जाग्रत्स्वप्नसुषुप्त्यवस्थाः ।

६॥१॥१ जाग्रदवस्था का ?

श्रोत्रादिज्ञानेन्द्रियैः शब्दादिविषयैश्च ज्ञायते

इति यत् सा जाग्रदवस्था ।

६॥१॥१॥१ स्थूल शरीराभिमानी आत्मा विश्व इत्युच्यते ।

६॥१॥२ स्वप्नावस्था केति चेत् ?

जाग्रदवस्थायां यद्दृष्टं यद् श्रुतम्

तज्जनितवासनया निद्रासमये यः प्रपञ्चः प्रतीयते

सा स्वप्नावस्था ।

६॥१॥२॥१ सूक्ष्मशरीराभिमानी आत्मा तैजस इत्युच्यते ।

६॥१॥३ अतः सुषुप्त्यवस्था का ?

अहं किमपि न जानामि सुखेन मया निद्राऽनुभूयत इति

सुषुप्त्यवस्था ।

६॥१॥३॥१ कारणशरीराभिमानी आत्मा प्राज्ञ इत्युच्यते ।

७॥० पञ्चकोशाः

७॥१ पञ्च कोशाः के ?

अन्नमयः प्राणमयः मनोमयः विज्ञानमयः आनन्दमयश्चेति ।

७॥१॥१ अन्नमयः कः ?

अन्नरसेनैव भूत्वा अन्नरसेनैव वृद्धिं प्राप्य

अन्नरूपपृथिव्यां यद्विलीयते तदन्नमयः कोशः
स्थूलशरीरम् ।

७॥१॥२ प्राणमयः कः ?

प्राणाद्याः पञ्चवायवः वागादीन्द्रियपञ्चकं
प्राणमयः कोशः ।

७॥१॥३ मनोमयः कोशः कः ?

मनश्च ज्ञानेन्द्रियपञ्चकं मिलित्वा यो भवति स
मनोमयः कोशः ।

७॥१॥४ विज्ञानमयः कः ?

बुद्धिज्ञानेन्द्रियपञ्चकं मिलित्वा यो भवति स
विज्ञानमयः कोशः ।

७॥१॥५ आनन्दमयः कः ?

एवमेव कारणशरीरभूताविद्यास्थमलिनसत्त्वं
प्रियादिवृत्तिसहितं सत् आनन्दमयः कोशः ।
एतत्कोशपञ्चकम् ।

८॥० आत्मन्

मदीयं शरीरं मदीयाः प्राणाः मदीयं मनश्च
मदीया बुद्धिर्मदीयं अज्ञानमिति स्वेनैव ज्ञायते
तद्यथा मदीयत्वेन ज्ञातं कटककुण्डल गृहादिकं
तद्यथा मदीयत्वेन ज्ञातं कटककुण्डलगृहादिकं
स्वस्मद्भिन्नं तथा पञ्चकोशादिकं स्वस्मद्भिन्नं
मदीयत्वेन ज्ञातमात्मा न भवति ॥

८॥१ आत्मा तर्हि कः ?

सच्चिदानन्दस्वरूपः ।

८॥१॥१ सत्किम् ?

कालत्रयेऽपि तिष्ठतीति सत् ।

८॥१॥२ चित्किम् ?

ज्ञानस्वरूपः ।

८॥१॥३ आनन्दः कः ?

सुखस्वरूपः ।

८॥२ एवं सच्चिदानन्दस्वरूपं स्वात्मानं विजानीयात् ।

९॥० अथ चतुर्विंशतितत्त्वोत्पत्तिप्रकारं वक्ष्यामः ।

९॥१ ब्रह्माश्रया सत्त्वरजस्तमोगुणात्मिका माया अस्ति ।

९॥१॥१ ततः आकाशः सम्भूतः ।

९॥१॥२ आकाशाद् वायुः ।

९॥१॥३ वायोस्तेजः ।

९॥१॥४ तेजस आपः ।

९॥१॥५ अद्भ्यः पृथिवी ।

९॥२ ज्ञानेन्द्रियसम्बूति

एतेषां पञ्चतत्त्वानां मध्ये

९॥२॥१ आकाशस्य सात्विकांशात् श्रोत्रेन्द्रियं सम्भूतम् ।

९॥२॥२ वायोः सात्विकांशात् त्वगिन्द्रियं सम्भूतम् ।

९॥२॥३ अग्नेः सात्विकांशात् चक्षुरिन्द्रियं सम्भूतम् ।

९॥२॥४ जलस्य सात्विकांशात् रसनेन्द्रियं सम्भूतम् ।

९॥२॥५ पृथिव्याः सात्विकांशात् घ्राणेन्द्रियं सम्भूतम् ।

९॥३ एतेषां पञ्चतत्त्वानां समष्टिसात्विकांशात्

मनोबुद्ध्यहङ्कार चित्तान्तःकरणानि सम्भूतानि ।

९॥३॥१ सङ्कल्पविकल्पात्मकं मनः ।

९॥३॥२ निश्चयात्मिका बुद्धिः ।

९॥३॥३ अहंकर्ता अहंकारः ।

९॥३॥४ चिन्तनकर्तृ चित्तम् ।

९॥४ अन्तःकरणदेवताः

९॥४॥१ मनसो देवता चन्द्रमाः ।

९॥४॥२ बुद्धेर्ब्रह्मा ।

९॥४॥३ अहंकारस्य रुद्रः ।

९॥४॥४ चित्तस्य वासुदेवः ।

९॥५ कर्मेन्द्रितसम्भूति

एतेषां पञ्चतत्त्वानां मध्ये

९॥५॥१ आकाशस्य राजसांशात् वागिन्द्रियं सम्भूतम् ।

९॥५॥२ वायोः राजसांशात् पाणीन्द्रियं सम्भूतम् ।

९॥५॥३ वन्हे राजसांशात् पादेन्द्रियं सम्भूतम् ।

९॥५॥४ जलस्य राजसांशात् उपस्थेन्द्रियं सम्भूतम् ।

९॥५॥५ पृथिव्या राजसांशात् गुदेन्द्रियं सम्भूतम् ।

९॥५॥६ एतेषां समष्टिराजसांशात् पञ्चप्राणाः सम्भूताः ।

९॥६ पञ्चतत्त्वसम्भूति

९॥६॥१ एतेषां पञ्चतत्त्वानां तामसांशात्

पञ्चीकृतपञ्चतत्त्वानि भवन्ति ।

पञ्चीकरणं कथम् इति चेत् ।

९॥६॥२ एतेषां पञ्चमहाभूतानां तामसांशस्वरूपम्

एकमेकं भूतं द्विधा विभज्य एकमेकमर्धं पृथक्

तूष्णीं व्यवस्थाप्य अपरमपरमर्धं चतुर्धा विभज्य

स्वार्धमन्येषु अर्धेषु स्वभागचतुष्टयसंयोजनं

कार्यम् । तदा पञ्चीकरणं भवति ।

९॥६॥३ एतेभ्यः पञ्चीकृतपञ्चमहाभूतेभ्यः स्थूलशरीरं

भवति ।

९॥६॥४ एवं पिण्डब्रह्माण्डयोरैक्यं सम्भूतम् ।

१०॥० जीवेश्वरभेदबुद्धिः

१०॥१ स्थूलशरीराभिमानी जीवनामकं ब्रह्मप्रतिबिम्बं भवति ।

स एव जीवः प्रकृत्या स्वस्मात् ईश्वरं भिन्नत्वेन जानाति ।

१०॥२ अविद्योपाधिः सन् आत्मा जीव इत्युच्यते ।

१०॥३ मायोपाधिः सन् ईश्वर इत्युच्यते ।

१०॥४ एवं उपाधिभेदात् जीवेश्वरभेददृष्टिः यावत्पर्यन्तं तिष्ठति

तावत्पर्यन्तं जन्ममरणादिरूपसंसारो न निवर्तते ।

१०॥५ तस्मात्कारणान्न जीवेश्वरयोर्भेदबुद्धिः स्वीकार्या ।

११॥० जीवेश्वरैक्यम्

ननु साहंकारस्य किंचिदज्ञस्य जीवस्य निरहंकारस्य

सर्वज्ञस्य ईश्वरस्य तत्त्वमसीति महावाक्यात्

कथमभेदबुद्धिः स्यादुभयोः

विरुद्धधर्माक्रान्तत्वात् । इति चेन्न ।

११॥१ स्थूलसूक्ष्मशरीराभिमानी त्वंपदवाच्यार्थः ।

उपाधिविनिर्मुक्तं समाधिदशासंपन्नं शुद्धं चैतन्यं

त्वंपदलक्ष्यार्थः ।

११॥२ एवं सर्वज्ञत्वादिविशिष्ट ईश्वरः तत्पदवाच्यार्थः ।

उपाधिशून्यं शुद्धचैतन्यं तत्पदलक्ष्यार्थः ।

११॥३  एवं च जीवेश्वरयो चैतन्यरूपेणाभेदे बाधकाभावः ।

।स्मल्ल्स्किप।ह्रुले।स्मल्ल्स्किप्

१२॥०  जीवन्मुक्तिः

एवं च वेदान्तवाक्यैः सद्गुरूपदेशेन च सर्वेष्वपि भूतेषु

येषां ब्रह्मबुद्धिरुत्पन्ना ते जीवन्मुक्ताः इत्यर्थः ।

१२॥१  ननु जीवन्मुक्तः कः ?

यथा देहोऽहं पुरुषोऽहं ब्राह्मणोऽहं शूद्रोऽहमस्मीति

दृढनिश्चयस्तथा नाहं ब्राह्मणः न शूद्रः न पुरुषः

किन्तु असंगः सच्चिदानन्दस्वरूपः  प्रकाशरूपः

सर्वान्तर्यामी चिदाकाशरूपोऽस्मीति दृढनिश्चय

रूपोऽपरोक्षज्ञानवान् जीवन्मुक्तः ॥

१२॥२  ब्रह्मैवाहमस्मीत्यपरोक्षज्ञानेन निखिलकर्मबन्धविनिर्मुक्तः स्यात् ।

१३॥०  कर्माणि

कर्माणि कतिविधानि सन्तीति चेत्

१३॥१  आगामिसञ्चितप्रारब्धभेदेन त्रिविधानि सन्ति ।

१३॥१॥१  ज्ञानोत्पत्त्यनन्तरं ज्ञानिदेहकृतं पुण्यपापरूपं कर्म

यदस्ति तदागामीत्यभिधीयते ।

१३॥१॥२  सञ्चितं कर्म किम् ?

अनन्तकोटिजन्मनां बीजभूतं सत् यत्कर्मजातं पूर्वार्जितं

तिष्ठति तत् सञ्चितं ज्ञेयम् ।

१३॥१॥३  प्रारब्धं कर्म किमिति चेत् ।

इदं शरीरमुत्पाद्य इह लोके एवं सुखदुःखादिप्रदं

यत्कर्म तत्प्रारब्धं

भोगेन नष्टं भवति प्रारब्धकर्मणां भोगादेव क्षय इति ।

१३॥२ सञ्चितं कर्म ब्रह्मैवाहमिति निश्चयात्मकज्ञानेन नश्यति ।

१३॥३ आगामि कर्म अपि ज्ञानेन नश्यति किंच आगामि कर्मणां नलिनीदलगतजलवत् ज्ञानिनां सम्बन्धो नास्ति ।

१३॥४ किंच ये ज्ञानिनं स्तुवन्ति भजन्ति अर्चयन्ति तान्प्रति ज्ञानिकृतं आगामि पुण्यं गच्छति ।

१३॥५ ये ज्ञानिनं निन्दन्ति द्विषन्ति दुःखप्रदानं कुर्वन्ति तान्प्रति ज्ञानिकृतं सर्वमागामि क्रियमाणं यदवाच्यं कर्म पापात्मकं तद्गच्छति ।

१३॥६ तथा चात्मवित्संसारं तीर्त्वा ब्रह्मानन्दमिहैव प्राप्नोति । तरति शोकमात्मवित् इति श्रुतेः ।

१३॥७ तनुं त्यजतु वा काश्यां श्वपचस्य गृहेऽथ वा ।
ज्ञानसंप्राप्तिसमये मुक्तोऽसौ विगताशयः । इति स्मृतेश्च ।

इति तत्त्वबोधप्रकरणं समाप्तम् ।